# गुह्यकाली गद्य सन्जीवन स्तोत्रम्

महाकाल उवाच

इदं स्तोत्रं पुरा देव्या त्रिपुरघ्नाय कीर्तितम् ।
त्रिपुरघ्नोऽपि मां प्रादात् उपदिश्य मनुं प्रिये ॥ 1 ॥

गद्याकारं च स विभुः स्तोत्रं तस्यै चकार ह ।
ततः प्रभृति गद्यं तत् जीवन्यासाभिधं मतम् ॥ 2 ॥

नाम्नां सहस्रं पठता पाठ्यं तदपि पार्वति ।
एतस्याः कीर्तनात् देवि तस्यापि न भवेत् फलम् ॥ 3 ॥

आख्यातव्यमतो यत्नात् एतत् गद्यमपि प्रिये ।
तस्य स्तोत्रस्य हि यतो जीवन्यासोऽयमीरितः ॥ 4 ॥

त्रिपुरघ्न उवाच

ओं फ्रें ह्रीं छ्रीं हूं स्त्रीं श्रीं क्लीं ख्फ्रें नमो भगवत्यै गुह्यकाल्यै जय जय जय महाचण्डयोगेश्वरि चण्डकापालिनि सिद्धिकरालि विकरालि कालिकापालिनि त्रिजगतीपालिनि सृष्टिस्थिति–संहारानाख्या–भासाभिध–पञ्चरूपधारिणि ब्रह्मविष्णुरुद्रावतारिणि प्रळयकारिणि महामारीमारिणि माहाघोरतर–पञ्चकाल–अनलवासिनि अट्टाट्टहासिनि ब्रह्मविद्याप्रकाशिनि नवपञ्चचक्रलयिनि महाभीषण–भुजङ्गबलयिनि त्रिभुवनजयिनि अध्यासित–श्मशानज्वाल–जाले चन्द्रखण्डाङ्कितभाले परेत–सुरासुर–निकरकी–कशरचित–ग्रैवेयकभाले प्रविस्त्रस्त–महापिङ्गळ–जटाभारे मृतब्रह्मकपालहारे त्रिभुवनसारे प्रदीपकेशरि गोमायुप्लवग–सिंहभल्लूक–मनुजसुपर्ण–मातङ्गमकरतुर–गाननाकार–दशवदने कटकटायमान–शितदीर्घवदने कृतदितिज–दनुजकदने सप्तविंशतिलोचने महाविततसंहारे पाशप्रमोचने कृतपरमसदाशिव–मनःप्रोचने शोणितो–दशायिनि हालापायिनि महामायिनि रुधिरार्णवे द्वीपकृतावासे विहित–परमसदाशिव–विलासे जयजनक–महादारुणहासे चतुर्वेद–वेद्यानुभावे अध्यासित–महादावे घोरतररावे प्रज्वलत्–पावक–शिखान्तश्चारिणि महादुःख–पापौघहारिणि भवभयतारिणि वृहल्लम्ब–मानोदरि तापत्रयहरि विश्वेश्वरि नवकोटि–कुलाकुल–चक्रप्रवर्तिनि निखिलरिपु–कुलकर्तिनि महाप्रळय–कालनर्तिनि चतुरशीति–

कोटिब्रह्माण्डोत्पत्ति–प्रतिपाल–संहारशालिनि ब्रह्मेन्द्रोपेन्द्र–मुण्डमालिनि महाचर्चरीकरतालिनि परापर–सामरस्य–रसमोहिनि भक्तजन–मनोरथ–दोहिनि कालिकाकुल–समयसंदोहिनि वाम–कर्कश–दोर्दण्ड–विधृत्–रक्तमाला–कपाल–चर्म–पाश–शक्ति–खट्वाङ्ग–मुण्ड–भुशुण्डी–चापचक्र–घण्टावाण–प्रेत–शिखरिणि मनुज–कंकाल–बभ्रुदर्वी–करोन्माद–मुरळी–मुद्गर–वह्निकुण्ड–डमरुपरिघ–भिन्दिपाल–मुशलपट्टिश–प्राशशतघ्नी–शिवापोते दक्षिणभुजावलंबित–रत्नमालाकर्तृंका–कृपाण–तर्जनीसृणिदण्डे रत्नकुंभ–त्रिशूल–पञ्चपाशुपत–वाणकुन्त–पारिजात–छुरिका–तोमर–कुसुममाला–डिण्डिम–गृध्रकमण्डलु–पललखण्डश्रुवबीजपूर–सूचीपरशुगदा–यष्टिमुष्टिकुणपलालने नरमुण्ड–नक्षत्र–मालालङ्कृते चतुर्दशभुवनसेवित–पादपद्मे दिगंबरि सकल–मन्त्र–यन्त्र–तन्त्राधि–दैवते गुह्यातिगुह्य–परमशक्ति–तत्त्वावतारे अष्टनागराजभूषित–समस्तदोर्मण्डले वागगोचरे प्रपंचातीत–निष्कल–तुरीयाकारे महाखेचरी–सिद्धिदायिनि त्रिलोकीग्रासिनि वेदोपवेद–अष्टदिक्पाल–पञ्चप्रेतमय–सिंहासनाधिरूढे नवकोटि–मालामन्त्रमय–कलेवरे महाविकरालतरे महाप्रळय–कालप्रकटितमोगुणे परसदाशिव–सङ्क्रामित–निजवैभवे समून्मूलित–प्रणत–नानाभवे ब्रह्मरन्ध्र–विनिविष्ट–निजकान्त–सामरस्य–सिन्धुमज्जनोन्मज्जनप्रिये वीरघण्टा–किङ्किणी–डमरुनिनादिते अपरिमिते बलपराक्रमे शुद्धविद्या–संप्रदाय–संसिद्ध–शुद्धचैतन्यस्वरूपे प्रकृत्य–परशिव–निर्वाणसाक्षिणि चण्डाति–चण्डकाण्ड–खण्डितासुरसमूहे भगमालिनि भगप्रिये भगातुरे भगाङ्कित भगरूपिणि भगलिङ्गद्राविणि कालचक्र–नरसिंहाकारधारि–परममहारुद्र–सुरतरसलोलुपे महापिङ्गळकेशि व्योमकेशि नियुतवक्त्रकरचरणे त्रिलोकीशरणे देहप्रभाजित–मेघजाले त्रयस्त्रिंशत्–कोटिमहादिव्यास्त्र–सन्धानकारिणि महाशङ्ख–समाकुले खर्परविहस्त्रस्तहस्ते विद्युत्कोटि–दुर्निरीक्ष्ये शवमांस–वसाकवलिनि वमदग्निमुखे फेरुकोटिपरिवृते नृत्यनिहितपादा–घातपरिवर्तित–भूवलयधेरण भग्नीकृत–कूर्मशेषनागभोगे मांसशोणितभोजिनि कुरुकुल्ले कृष्णतुण्डि रक्तमुखिचण्डे शवरि पीवरे रक्षिके यमघण्टे चर्चिके सकल–महोपद्रव–प्रभञ्जिनि सकलजन–मनोरञ्जिनि महाभिचार–कृत्यागञ्जिनि भक्तजन–हृदयाधि–निर्दलिनि कोटिप्रचण्ड–दोर्वलिनि कैवल्य–निर्वाण–नलिनि गुह्यकालि अरूपे विरूपे विश्वरूपे सिद्धिविद्ये महाविद्ये अजिते अलक्षिते अमिते अद्वैते अपराजिते अप्रतिहिते अगोचरे अव्यक्ते भद्रे सुभद्रे मातङ्गि किराति चाण्डालि द्राविणि भ्रामरि भ्रमरि उल्कापुञ्जिनि वेतण्डभण्डिनि प्रळय–ताण्डव–मण्डिनि इन्द्रोपेन्द्रजननि मृत्युञ्जयगृहिणि सावित्रि गायत्रि महित्रि सवित्रि सरस्वति मेधे लक्ष्मीविभूतिप्रदे  कुमारि–युवति–वृद्धे सन्ध्ये महारात्रि मायूरि कुक्कुटि शान्तिकरि पुष्टिवर्द्धिनि गङ्गे यमुने गोदावरि नर्मदे सदाशिव–सहधर्मचारिणि महानिरयतारिणि कौलाचारव्रतिनि  कौलाचारकुट्टिनि  कुलधर्मरक्षिके अबीजे नानाबीजे जगद्बीजे बीजार्णवे अमूर्ते विमूर्ते नानामूर्ते मूर्त्यतीते सकलमूर्तिधरे ब्रह्माण्डेश्वरि ब्रह्माण्डकलेवरे कोटिब्रह्माण्ड–सृष्टिकारिणि सर्वेश्वरि सर्वेश्वरगम्ये सर्वैश्वर्यदायिनि सर्वसर्वेश्वरि प्रसीद प्रसीद प्रसीद फ्रें ख्फ्रें हस्ख्फ्रें हूं फट् हूं फट् नमः स्वाहा ओं ॥ 5 ॥

इति ते कथितं गद्यं त्रिपुरघ्न मुखोद्गतम् ।
पूर्वस्तवस्य ज्ञातव्यं इदं प्राणसमं प्रिये ॥ 6 ॥

तत् पाठात् नन्तरं पाठ्यं एतद् यत्नेन पार्वति ।
तदैव लभते तस्य फलं झटिति नान्यथा ॥ 7 ॥

गद्यस्योत् कीर्तनात् देवि सर्वपापैः प्रमुच्यते ।
सर्वांश्च कामान् आप्नोति सर्वाः सिद्धीश्च विन्दति ॥ 8 ॥

मङ्गळानि च सर्वाणि लभते पाठमात्रतः ।
जगद्वशयति क्षिप्रं मोहयत्यपि पार्थिवान् ॥ 9 ॥

यान् यान् कामान् अभिध्यायन् पठत्युभयं ईश्वरि ।
करामलकवत्तं तं कुरुते नात्र संशयः ॥ 10 ॥

चराचरमिदं विश्वं यत्किञ्चित् परिदृश्यते ।
नाकलोके च याः ख्याताः समस्ता देवयोनयः ॥ 11 ॥

पाताळे सन्ति यावत्यो नागसर्पादि सृष्टयः ।
अधीश्वरी समस्तानां गुह्यकाली प्रकीर्तिता ॥ 12 ॥

सा देव्येतत् पाठकस्य वशीभूतेव तिष्ठति ।
इतः परं को महिमा किं फलं चास्य वर्ण्यताम् ॥ 13 ॥

पठितव्यं अवश्यं ते पाठनीयाश्च बान्धवाः ।
भक्तेभ्यश्च प्रदातव्यं आवयोः सुरवन्दिते ॥ 14 ॥

गोपनीयं नन्दिकेभ्यः सत्यं सत्यं वचो मम ।
देवि उवाच
त्रिपुरघ्नेन यत्तुभ्यं उपदिष्टं पुरा प्रभो ॥ 15 ॥

॥ इति गुह्यकाली गद्य सन्जीवन स्तोत्रं संपूर्णम् ॥